वाणीं भजत




## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

संपुटः ७ | 15th April & May 1969 | क्रमांकौ ४, ५



सौम्य - चैत्र वैशाखांकौ ] शकवर्षः १८९० [मूल्यम् ४० पैसाः

# विषयसूचिका








# चिन्तये भारत मनारतम्

---

चिन्तये भारतमनारतमू
शान्तये मनसः निकृन्तनायापदः ॥ ॥ जिन्तये ॥

सकलसभ्यतासमलंकृतम्
अविकलसमतासमुल्लासितम् ,
अखिलप्रान्तपरीगुम्भितैक्यकम्
सुखमयजीवननिधानम् ॥ ॥ चिन्तये ॥

पुण्यनदीनदपरिभूषितमू ,
अगण्मपुण्यक्षेत्रपरिवेष्टितम् ,
सुन्दरनन्दनबनोज़्लम्
मन्दिरसौन्दर्यविद्योपितम् ॥ ॥ चिन्तये ॥

सकलवातावरणसंभावितम्
सकलवस्तुजालसम्पूरितम् ,
सहलहृदयसम्मानितम्
अविरलास्तिक्यपरिशोमितम् ॥ ॥ चिन्तये ॥

—:0:—

# सम्पादकीयम्

*

## इयमभिवृद्धिर्विनाशो वा ?

कालेस्मिन् अभिवृद्धिः भवति ह्रासो वा नैव निर्णेततुं शक्यते। प्रयाण-साधनानां वस्त्रभूषणादीनां आहारविशेषाणां विहारस्थानानां विनोदावलंबनानां च शतशस्सहस्रशश्च वृद्धेः कारणात् मानवानां नागरिकताया अभिवृद्धिः भवतीति सुदृढं निर्धारयितुं शक्यते। पुरा देवा एव खेचराः श्रूयन्ते स्म, नल एव विद्युत्साधकः, दुर्योधन एव जलस्तंभकः, रावण एव चन्द्रलोकगामी, नारद एव लोकवार्ताहरः, ऋषय एव दूरश्रवणदूरदर्शनसमर्था आसन्। एवं अर्जुन एव पातालगंगाकर्षकः, अश्विनावेव शस्त्रचिकित्साविशारदौ जन्त्वंतरावयवसंयोजननिपुणौ प्राणाचार्यावास्ताम्।

अद्यत्वेतु बहवः खेचराः, विद्युत्सिद्धाः, जलस्तम्भकाः, ग्रहलोकयात्रिणः, दूरश्रवणदूरदर्शनपटवः, पातालगंगाहारकाः, शस्त्रचिकित्सानिष्णाता एधन्ते।

नगराणि विस्तीर्यन्ते, क्षिप्रयानानि धावन्ति, धनं दघनमासीत्। अपितु बुभुक्षा न प्रशाम्यति जिघत्सा प्रसरति परद्रव्यजिघृक्षा च सर्वत्र व्याप्नोति। तदनुगुणं च हूति मारणास्त्राणि, बह्वः विषगुटिकाः, विषचूर्णानि च उत्पादितानि। परस्परं भीषयन्ति खण्डखण्डान्तरप्रभुत्वानि सीमास्थं दूरस्थं वा राज्यं स्वबलेन, अग्रराज्यानि त्रिचतुराणि परस्परभीषणेन सह पृष्टाराज्यानि आत्मप्रभावाधीनानि कर्षन्ति। स्वचोदनासहकृताति राज्याति आक्रामन्ति घट्टयन्ति कुट्टयन्ति विध्वंसयन्ति यावत्स्ववाक्यानुपालनम्।

एवं स्थिते न राज्यस्य न संघस्य न व्यक्तेः वा निर्भयता स्वातंत्र्यं प्रशान्तता वा अस्ति। धनिनां निर्धनेभ्यो, भूस्वामिनां कर्षकेभ्यः, यन्त्रागरिकाणां कार्मिकेभ्यः, वृद्धानां युवकेभ्यः, सदाचाराणां दुराचारिभ्यः भयमिति महती भीतिपरम्परा। एकस्मिन्नेव कुटुम्बे पिता कांग्रेसीयः, सुतः कम्यूनिष्टः, भार्या स्वतन्त्रा, स्नुषा सोषलिष्टा। एवं बहुविमतिभिन्नः कुटम्बः देशः प्रपञ्च एव शिथिलशिथिलो वर्तते। न सुखं, नानन्दः न मोदः, न सम्मोदः अनुभूयते केनापि जनेन। सर्वेपि स्वतन्त्राः वस्तुतः अस्वतन्त्राः, सर्वे सुखिनः वस्तुतो दुःखिनः, सर्वे नागरिकाः विचार्यमाणे अनागरिकाः वर्तन्ते। सर्वे जिह्वामधुकाः जन्तुफल सदृशाः बहिर्मनोहराः अंन्तः सन्ततदुःखजालसंवलिताः कालं यापयन्ति। किमिदं लोकस्याभिवृद्धिसूचकं उत नाशसूचकं इति सहृदया एव विचारयन्तु।

अणुस्फोटः आविष्कृतो नूनं। परन्तु तदुत्पादितं लोकनाशवर्त्म कियद्घोरम्! अणुधूलिप्रसारात् मनुजसन्ततिरेव सहस्रवत्सरपर्यन्तं विकलाङ्गी अल्पप्राणा संपत्स्यते इति श्रुतम्। किमिदं लोकक्षेमकारकम्?

चन्द्रलोकगमनसन्नाहः नूनं जनानां आनन्दजनक एव प्रथते। किन्तु तत्र धनस्य महती राशिः हूयते येन प्रजानां सौख्यापादमं प्रभुतायाः अवशं परिणमति। अपि चेदमवश्यंचिन्तनीयम् स्वाधिपत्यस्थले शान्तायुत्पादनासमर्थानां गोळांतरे अवतरणम् अतिबाल्यचचापलमिति।

इदंतु सत्यं यदेतादृशस्पर्धया कानिचन नूतनसाधनानि आविष्कृतानि मानवैः इति।

वेधयन्त्राणां ससंकल्पानुगप्रचारणं, दूरतो वातानां प्रतिबिम्बानां चाकर्षणं, जीवानां तत्तत्कक्ष्यावातावरणानुगुणं संरक्षणं, सूर्यकिरणौष्ण्यादिसहानां कवचानां सर्जनं आकाशकक्ष्यारहस्यानां विज्ञानं इत्येवमादीनि बहूनिप्रयोजनानि सुसाधितानि।

एवमपि मनुजस्य आशा स्वशाखाः प्रतनुते। अधिकारविस्तारे धनराशीनां संचयने च मानवः स्वमानवतां दूरीकृत्य पशोरपि अधमतया प्रवर्तते।

भौतिकवादः सर्वत्र परिस्फुरति। आध्यात्मवादः अधोलोकं गतोऽतः मनुजः अशान्तः अन्तर्बहिश्च प्रतप्यते।

सन्ताननिरोधः सन्तानविद्वेषः सन्तानध्वंसः सन्ततं वर्धते। जारतायाः विहारः, चोरतायाः गौरवं, मानवतायाः अवमानः, पशुतायाः राक्षसतायाः वा उपादेयता प्रवर्धते।

वाक्चातुतया परातिसन्धानं वाङमाधुर्येण परप्रतारणं प्रशस्यतेता कलाकुशलसम्भाव्यते। चलचित्रविनोदेषु पामरजनमनो विनोदनायोपकल्पितानि सत्यानि मन्यन्ते मानवैः, तदनुगुणमेव च आचर्यते।

एवं स्थिते जगताः किमभिवृद्धिरनुभूयते उत विनाशः इति नैवनिश्चीयते।



॥ श्रीः ॥

श्री हस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ।

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ।

श्रीकाञ्ची जगदाचार्यसिंहासनाधीश प्रतिवादिभयङ्कर अण्णङ्गराचार्यकृतिषु

# ॥ सदर्थ समुच्चयः ॥



श्रीमच्छठारियतिपुङ्गवकूरनाथ भट्टार्यलोकगुरुवेङ्कटनाथमुख्याः ।
सौम्योपयन्तृयमिनश्च ममान्तरङ्गे यद्यल्लिखन्ति विलिखामि तदेव सत्यम् ॥

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ।
इत्युक्तयर्हमिदं ग्रन्थरत्नं कण्ठे सतां लसेत् ॥

— लेखनप्रणालीप्रतिबोधनम् —

१. अधीतबहुग्रन्थैः लौकिकानुभवकुशलैर्विपश्चिदपश्चिमैरपि यदि यं कमपि विषयमधिकृत्य लेखितुमुपन्यसितुं वाऽभिलष्यते, प्रायस्ते विवक्षितमंशं सुबोधमुद्घाटयितुमपारयन्तः परमं क्लेशं प्रतिपद्यन्ते । विषयाणां सङ्गतिविशिष्ट-क्रमेण विन्यासे उपक्रमोपसंहारसौष्ठवसम्पादने च असमर्थास्तम्यन्ति । पठितॄणां श्रोतॄणां च सुमनसां पठने च श्रवणे च यथापुनरुन्मस्तक उत्साह उज्जृम्भेत, नाहारे नापि हारे च मनः प्रसर्पेत, तथा नाम लेखनेन वा भाषणेन वा भवितव्यमिति सर्वसम्मतोऽयमंशः । एवं रीत्या लेखितुमुपन्यसितुं वा यदि कश्चिच्छक्तिमवाप्नुयात् स नूनमद्भुतशक्तियुक्तः विलक्षणः पुरुष इत्येव काममभि-नन्द्यो भवेत् । अन्यादृशी खल्वियं विद्या यल्लेखनकौशलम् उपन्यसनप्रागल्भ्यं

चेति। स्वल्पीयसीमेव विद्यामधीतवन्तो लोकानुभवविज्ञानविधुराश्च यदि किमपि लेखितुमुपक्रमेरन् ते खलु प्रथमतो विषयस्य शीर्षकं विन्यसितुमेव भृशं विह्वला अथ अथञ्चिन्महता प्रयासेन "कश्चन विषयः" इति शीर्षकं विन्यस्य, तत उपरि विवक्षिते विषये लेखिनीं चालयितुं सुबहु मुह्यन्तः पञ्चषपङ्क्तिमात्र एव स्वकीयमुपक्रममुपसंहरेयुः। तेषु महीयानापि विषयः क्षोदीयानेव सन् पर्यवस्यति। लोकानुभवभूम्ना विपुलविद्यापरिश्रमविभवेन च समुल्लसितप्रज्ञाबलानां तु सुधियां लघीयानापि विषयो गरीयानेव भवति लेखनेषु उपन्यासेषु वा। किमत्र कारणम्? ते खलु निजविज्ञानविशेषेण ह्रस्वमपि विषयं द्राघीयांसमाकलयितुमीशते। अत एव उपन्यसनचातुरी लेखनवैखरीनैपुणी प्रेप्सुभिर्विद्यार्थिभिर्विशेषतो बहुषु भूयस्सु वा ग्रन्थेषु परिचयभूमा लोकानुभवातिशयश्च सम्पादनीयौ।

२. बहवः खलु मन्यन्ते लेखनमुपन्यसनं वा किं नु ब्रह्मविद्या? इति। तैः पुनरवधेयम्—न तावत्कतिपयपदानां संघटनमात्रमेव लेखनमुपन्यासो वा भवितुमर्हतीति। प्रथमतः शब्ददोषावकाशविरहोऽवधेयः। कथं च गुणपरिगाहिता संपाद्या। पदानां सौभ्रात्रात श्रवणयोरनिमिषनपेक्ष्यता प्रधानसम्पादनीया। ★ एकश्शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति ★ इति ह्यामनन्ति। अपशब्दगन्धमप्रहाय लेखनं तु विरलमेव पण्डितेष्वपि प्राय। घटस्य भूतले वर्तमानत्वादिति वाक्यस्य तात्पर्यं हृदि निधाय, पदानां व्यासरूपेण प्रयोगापेक्षयाऽपि समासरूपेण प्रयोगे शोभातिशयो वर्तत इति श्रुत्वा कोऽपि पण्डितप्रवरः ۞ घटभूतल वर्तितेत्वादिति प्रायुङ्क्तेति निशमयामः। यूयं वक्तव्यमित्यपरः पण्डित आह। "நீங்கள் சொல்லவேணும்" इति द्राविड्यामुच्यते यथा तथैव कथने को दोष इति च पृच्छति। एवंविधा इतिहासा बहवः श्रुतचरा अस्माकम्। सन्तु नाम तादृशाः पण्डिताः। अधीतकृत्स्नव्याकरणशास्त्रा अपि भूयांसो विद्वांसः शब्दनैर्दोष्यविषये प्रायेण न जागरूका भवन्ती-

स्यनुभवसाक्षिकमिदमस्माकं न तावन्निगूहितुं शक्यते। लक्षणग्रन्थपरिचयापेक्षयाऽपि लक्ष्यग्रन्थेषु भूयान् गाढतरः परिचय एव प्राधान्यतः सम्पादनीयः। स एव भूयस्सुपकारक इति च सुदृढमध्यवस्यामो वयम्। शिशुपालवधं नैषधं भट्टिकाव्य-मित्यादीनां काव्यानां कण्ठपाठो महते कल्पते ह्युपकाराय। यैवमुपकरोति विपुल-मपि व्याकरणविज्ञानमिति निर्धारयता मस्माकं सन्ति सधर्माणस्सुबहवस्सुधियः। नैतावता वयं व्याकरणशास्त्रपरिश्रमं निषेधामः। अवश्यमेवाध्येयं व्याकरणम्। अथ च, काव्यानां महामहोपाध्याय मल्लिनाथ सूरिव्याख्यानमानुपूर्व्याऽवर्ज्यं प्रेक्षणीयं वर्धिष्णुधिः। तदीयव्याख्यानस्य सौवादत्वमन्यादृशम्। तस्मिन् गाढपरिश्रमेण शब्दमर्मसर्वस्वविज्ञानां विलक्षणं जायेत। सोऽपि महामतिः क्वचित्क्वचित्प्रमाद्यतीति तदास्तां नाम। शब्दमर्म जिज्ञासूनामत्यन्तमुपकारकं तद्व्याख्यानमित्यप्रघृष्यमेतत्। काव्यपाठप्रवचनकाले मूलार्थं व्याख्याननैरपेक्ष्येणैव निस्संशयविपर्यय मवगन्तुमव-गमयितुं च शक्तैरपि मल्लिनाथसूरिव्याख्यानवाचां साकल्येन समवलोकनं नैव वर्जनीय मित्यस्मदुपाध्यायपादेभ्यः शश्वदश्रौष्म॥ एवंविधनानाग्रन्थपरिश्रम-भूमसमेधमानप्रज्ञाविलासाः प्राज्ञपरिबृढा एव गैर्वाण्या वाण्या लेखितुमुपन्यसितुं च कुशलाः, अमी एव सुमनसां मनः प्रसभमावर्जयितुमनपायशक्तिका इति सुवचम्॥ अस्तु तावदेतत्॥ ... .... ۞

२. जागता जना स्सामान्यतस्त्रेधा विभागमर्हन्ति - आस्तिका नास्तिका आस्तिकनास्तिकाश्चेति। अस्ति परलोकः, स्तः पुण्यपापकर्मणी, सन्ति देवता-विशेषाः परदैवतसनाथाः इति ये गृह्णन्ति ते आस्तिकाः। प्रोक्तमेतदखिलं नैवेति गृहीत्वा। ۞ यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः। भस्मीभूतस्य देहस्य पुनरागमनं कुतः?॥ ۞ इति वादकेलिमुपबृंहयन्ति ये ते नास्तिकाः। बहिरा-स्तिकवादाभिनयनिरता अन्तर्हृदि नास्तिकभावमेव बिभ्रति ये ते तावदास्तिकनास्ति-काः। एतेषु आस्तिकाः स्वयमुज्जीवितुं प्रभवन्ति सुखेन। नास्तिकाश्च उपदेशादिभि-

विनयनेनोज्जीवनं लम्भयितुं शक्या योग्याश्च भवन्ति। आस्तिकनास्तिकास्तु सर्वथ-ऽप्यधोगतिमनुविन्दन्तः शोचनीयजन्मानो भवन्ति हन्त!। ❁ अज्ञस्सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः। ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति॥ ❁ इत्येतत्सुभाषितमिह स्मृतिपथं नेतुं योग्यम् ॥ ... ... ❁

४. नास्तिकमतं लोकायतमतमिति व्यपदेशभाजनं प्रथते। लोके आयतं यत् तदेव हि लोकायतम्। प्रायः कृत्स्नोऽपि लोको नास्तिकैरेव भरितो यत स्तत एवैतेषां मतं लोकायतमभवत्। त्रिविक्रमभगवतः पादारविन्द मिव लोके विस्तीर्णं ह्येतत्। ❁ सर्वतः करवीरादीन् सूते सागरमेखला। मृतसंजीवनी यत्र मृग्यमाणदशां गता॥ ❁ इति हि प्राह श्रीमान् वेङ्कटनाथार्यः। मणिमाणिक्यादीनामनर्घवस्तूनाम् अतिविरलत्वेनात्यन्तदौर्लभ्यम् करीषपुरीषादीनां सर्वथा सौलभ्यं च ननु नियतमनुभवामः। उपादेयवस्तूनां मृग्यत्वम् हेयवस्तूना-मतिसौलभ्यं च लक्षणम् इत्यपि सुग्रहम्। जगति विद्वांसः कति? मूढा मूर्खाश्च कति? इत्यनुयुक्ते किमुत्तरयिष्यथ? नास्तिकमतस्य अवैदिकमतस्य वा सर्वतः प्रसृमरत्वमात्रेण अस्तिकमतस्य को निकर्षः? प्रत्युत समुत्कर्ष एवेति सुवचम् ॥

५. भगवान् नास्तीति ये वदन्ति, ते भगवानस्तीत्येव प्रोक्तवन्तस्सिध्यन्ति। आः! कथमेतत्? नास्तीत्युक्ते अस्तीत्यर्थसिद्धिः कथमिवेति प्रक्ष्यथ। ब्रूमहे अवधत्त। लोके यद्यद्वस्तु समुद्दिश्य नास्तीति प्रयुञ्ज्महे तत्तद्वस्तु प्रकारान्तरेण अस्तीत्येव सिध्यतीति किं न पश्यन्ति भवन्तः? घटो नास्ति पटो नास्तीत्येवं-विधा नास्तिसंवलिताः पारेपरार्धमपि परिगृह्यन्तां व्यवहाराः। घटः पटो वा अत्र नास्ति, इदानीं नास्तीति विवक्षा वा? उत सर्वदा सर्वत्रैव नास्तीति विवक्षा वेति विमृशत। विमर्शे तावदनायासं ज्ञास्यथ स्थलविशेषे समयविशेषे च तत्तद्वस्तूनामसत्ता मभिदधति नास्तिवादिन इति।

(सशेषम्)

# श्रीमतां क. लक्ष्मणशास्त्रिणां

# संस्कृतप्रचार सम्मेलनाध्यक्षीयं भाषणम्

( पूर्वानुबन्धः )

अभिनवगुप्त - कैयट - मम्मट - कल्हण - बिह्लणादिमहामनीषिणां जन्मभूमौ कश्मीरप्रदेशे तु एकोऽपि संस्कृतविद्यालयः सम्प्रति नास्ति। यश्च एको विद्यालयो महाराज हरिसिंहस्य समये प्रचलति स्म सोऽपि शेख अब्दुल्ला-महोदयैः स्वमन्त्रित्वकाले अरबी-फारसी भाषयोः समावेशेन "ओरिएन्टल स्कूल" सम्पादितः। तत्र सम्प्रति अरबी-फारसी भाषयोः समक्षं संस्कृतभाषा तथा तयोरध्यापकानां छात्राणां च समक्ष संस्कृतस्य अध्यापकाश्छात्राश्च दीनदीना इव पराभूता इव उपेक्षिता इव च कथमपि दिनानि यापयन्ति। एवञ्च यस्मिन् प्रदेशे संस्कृतसरस्वत्या मन्दाकिनी प्रवहति स्म तत्र तस्या एकः सरोवरोऽपि न दृष्टिपथमायातीति पर्यालोच्य कस्य सचेतसः संस्कृतप्रणयिनो हृदयं शोकाकुलं नेत्रे च अश्रु परिप्लुते न भवतः।

एवञ्च संस्कृतभाषायाः सामान्यज्ञानस्य तथा तदीयशास्त्राणां विशिष्टबोद्धुष्यस्य च परितः प्रसारमार्गे अवरुद्धे तथा पुराणकथा-प्रवचनादिष्वपि बिरलतां गतेषु कथमिव भारतीया संस्कृतिः प्राणान् धारयितुं शक्नोति कथं च संयमनियम-प्रधाना सदाचारमयी अस्माकं परम्परागता जीवनपद्धतिः चिरं स्थातुं शक्नोतीति सामान्यधियाऽपि सम्यगवगन्तुं शक्यते।

भारतस्य सर्वेष्वपि प्रदेशेषु भ्रमणं कुर्वता मया कश्चिन्न्यूनाधिकरूपेण इयमेव दशा सर्वत्र विलोक्यते। यदि विभिन्नप्रदेशेषु विद्यमानायाः संस्कृत-दुर्दशायाः पृथक्-पृथक् रूपेण विस्तृतं विवरणं दीयेत तदा स्वतन्त्र एवैकः सुमान् निबन्धः सम्पद्येत इत्यत्रैव मया विरम्यते विस्तरात्। विदितश्चायं विषयः

सर्वेषां विदुषाम्, अनुभूयमानश्च दिने दिने वर्तते। ततोऽप्यहं न समुत्सहे विषयस्यास्य विस्तरशो निरूपणे।

मन्ये, अनेन चिन्तासन्तापजनकेन मदीयेन वक्तव्येन नितरां नैराश्यमुपगताः स्युः केचन विद्वांसः संस्कृताभिमानिनश्च। परन्तु अस्यां परिस्थितौ नैव किञ्चित् परिवर्तनं कर्तुं शक्यते इति तत्कथनस्य कदापि नाशयो मन्तव्यः। वस्तुतस्तु अयमेव कालः संस्कृतपण्डितानां संस्कृताभिमानिनां च सङ्घटनस्य स्वकर्तव्यपालनस्य तथा स्वपुरुषार्थप्रदर्शनस्य चेति सर्वथा अनुकूलः समुचितश्चेति निरूपणायैव मया विषयस्यास्य समुपन्यासस्तथा विहितः।

संस्कृते खलु गोशब्दस्य त्रिविधा अर्था भवन्ति। एकः वाणीरूपोऽर्थः द्वितीयो धेनुरूपोऽर्थः तृतीयश्च भूमिरूपोऽर्थः। दौर्भाग्यवशात् सम्प्रति श्रुतेः संस्कृतभाषायाश्च उपेक्षितत्वात्, धेनूनाञ्च अहरहः सहस्रसहस्राणां घातात् तथा चीनपाकिस्तानराष्ट्राभ्यामन्यायपूर्वकं भारतभूमेर्विपुलभागस्य अपहृतत्वात्, आक्रान्तत्वाच्च गोशब्दस्य त्रयोऽप्यर्थाः सङ्कटग्रस्ताः शोचनीयाश्च संवृत्ता वर्तन्ते। परन्तु भारतभूमिरक्षायै भारतीयसैनिकाः प्रचुरसंख्यायां सीमान्तप्रदेशेषु अहर्निशं जागरूकाः विराजन्ते। बहवो गोभक्ताश्च गोहत्या निवारणाय सङ्घबद्धा भूत्वा आन्दोलनं कुर्वन्ति, कारागारेषु गच्छन्ति तथा स्वसमीहितपूर्तिपर्यन्तं निरन्तरमान्दोलनसञ्चालनाय कृतप्रतिज्ञाश्च वर्तन्ते। अतः भूमिरूपस्यार्थस्य धेनुरूपस्य चार्थस्य सम्प्रति तादृशी चिन्तनीया परिस्थितिः नास्ति। परन्तु वाणीरूपस्यार्थस्य रक्षायै न केन्द्रस्य ध्यानं वर्तते न वा तद्भक्तानामेव किमपि गोरक्षासदृशमान्दोलनं वर्तते इति अयमेव विषयः सम्प्रति सर्वथा चिन्तनीयतां भजते। अतश्च सम्प्रति एतद्रक्षायै संस्कृतपण्डितसमाजस्य संस्कृताभिमानिवर्गस्य च विशेषरूपेण जागरूकतायाः सन्नद्धतायाः तथा संकल्पग्रहणस्य च आवश्यकता वर्तते। अस्यां परिषदि विभिन्नप्रदेशेभ्यः समुपागता भवन्तः सर्वेऽपि परमपवित्रेऽस्मिन् भागीरथीतटे

संस्कृतप्रचारस्य सुदृढसंकल्पमादाय इतो गृहान् गच्छन्तु, यथाकालं यथाशक्ति यथामति च किञ्चिदपि संस्कृतप्रचारौपयिकं च कार्यमवश्यमेव स्वस्वस्थाने सम्पादयन्तु इति मम भवद्भ्यः सबहुमानं सविनयं च व्यक्तिशो निवेदनं वर्तते। तदर्थमहं सम्प्रति द्वित्राणि समयोचितानि आवश्यकानि कर्तव्यानि श्रीमतां सेवायामुपस्थापयितु तत्रसर्वत्रापि संस्कृतस्य ऐच्छिकत्वमेव प्रधानं कारणम्। हिन्दीभाषिषु प्रदेशेषु तु त्रिभाषायोजनायां तृतीयभाषारूपेण संस्कृतस्य परिगृहीतत्वात् कतिपयकक्षापर्यन्तं संस्कृतशिक्षा आवश्यकतया प्रचलति स्म। परन्तु कोठारी-आयोगस्य निर्णयानुसारं यदि तृतीयभाषास्थाने संस्कृतं परित्यज्य अन्यैव काचित् प्रादेशिकी भाषा अध्याप्यते तदा एतेष्वपि प्रदेशेषु संस्कृतस्य आवश्यकमध्ययनं शीघ्रमेव समाप्तं भविष्यति। यदि कोठारी-आयोगस्य निर्णये संशोधनं विधाय प्रदेशिकभाषया हिन्द्या वा सह अर्द्धांशरूपेण तृतीयांशरूपेण वा संस्कृतस्यापि सन्निवेशो विधीयेत तदा संस्कृताध्ययनमपि सर्वत्र प्रचलितं भवितुमर्हति। एतदर्थं डा॰ सम्पूर्णानन्द, श्री के॰ एम॰ मुंशी, श्री अनन्तशयनम आयङ्गर प्रभृतिभिर्बहुभिर्माननीयैर्मनीषिभिः, तथा संस्कृत विश्व परिषत्, अ॰ भा॰ संस्कृत साहित्य सम्मेलनम्, सार्वभौम संस्कृत प्रचार कार्यालयश्चेति वह्वीभिः कोठारी आयोगस्य विरोधः कृतस्तथा संस्कृतसमर्थनाय अनकेशः प्रस्तावाः स्वीकृताः प्रेषिताश्च केन्द्रशासनसमक्षम्। परन्तु केन्द्रीयशासनस्य त्रिभाषायोजनायां संस्कृतस्याप्रवेशविषये बलवदाग्रहो दृश्यते। यतः भाषाशिक्षणे कथमपि चतुर्थी भाषा न सन्निवेशनीया इति अयोगस्य निर्देशः अस्ति। अतः संस्कृतशिक्षायाः आवश्यकरूपेण ग्रहणस्य आशा दुराशामात्रमेव प्रतिभाति।

हिन्दीभाषिषु प्रदेशेषु तृतीयभाषारूपेण यदि प्रादेशिकभाषाया अध्ययनं परित्यज्य संस्कृतयेव गृह्यते तदा तेषु संस्कृतशिक्षा आवश्यकतया सुरक्षिता भवितुमर्हति। अस्मिन् विषये भारतस्य प्रधान न्यायाधीशैः केन्द्रीयसंस्कृत समितेरध्यक्षैः श्री एम्॰ पतञ्जलिशास्त्रि महोदयैरपि अनुकूला विचाराः प्रकटी-

कृताः । काशी हिन्दूविश्वविद्यालयस्य १९५६ तमवर्षीये दीक्षान्तभाषणे तैः अहिन्दीभाषाभाषिणां कृते मातृभाषा-ईंग्लिश-हिन्दीति भाषात्रितयानन्तरं चतुर्थ्याः संस्कृतभाषायः ग्रहणे काठिन्यं प्रतिपादयद्भिः कथितम् —

As Hindi is the regional language of this part of the country, I think there ought to be a room in the curriculum for the Sanskrit as a compulsory subject. If even in the Hindi speaking regions Sanskrit is not accorded that status, the prospect of its survival on any significant scale in free India is gloomy indeed.

परन्तु समस्तेऽपि भारते शिक्षायामेकरूपताया अभीष्टत्वात् तथा दक्षिणभारते हिन्दीवत् हिन्दीभाषिषु प्रदेशेष्वपि तृतीयभाषारूपेण कस्याश्चित् दक्षिण-भारतीयभाषाया ग्रहणाय दाक्षिणात्यैर्जनैः विशेषतश्च तमिलभाषिभि-र्मुहुर्मुहुराग्रहस्य विधीयमानत्वात् हिन्दीभाषिणः प्रदेशा अपि संस्कृतपरित्यागाय शनैः शनैः कृतनिश्चया इव प्रतिभान्ति । एषा परिस्थितिः खलु वर्तते संस्कृतशिक्षाया आवश्यकतायाः ।

एवमेव प्राचीनपद्धत्या परिचाल्यमानेषु विद्यालयेषु महाविद्यालयेषु च सुदीर्घकालात् वेदादिसकलशास्त्राणां यद् अध्ययनमध्यापनं च प्रचलति स तस्यापि साम्प्रतं विद्यार्थिसंख्यायाः दिनानुदिनं क्षीयमाणत्वात् तथा अध्यापकानां कृते समुचितवेतनादिप्रदानव्यवस्थाया अभावात् शनैः शनैः समाप्तिरासन्नप्राया एवेति अनिच्छद्भिरपि अस्माभिः सखेदं स्वीकर्तव्यमेव । यद्यपि दक्षिणभारतस्य चतुर्ष्वपि प्रदेशेषु तथा महाराष्ट्रे च अद्यापि वेदानां पूर्वोत्तरमीमांसयोश्च सम्यगध्ययनं प्रचलति तथा पीठाधीश्वराणां समागमेषु च वैदिकानां महान्तं समुदायं दृष्ट्वा अद्यापि वेदरक्षाया विश्वासो भवति । एवमेव मिथिलायां वङ्गेषु च न्यायशास्त्रस्यापि साधीयसी चर्चा वर्तते परं वेदानां पूर्वोत्तरमीमांसयोश्च तत्रापि प्रचारो विरल एव । (सशेषम्)

# कीलकवत्सर उत्तरयण परीक्षाफलितांशाः
# संस्कृत भाषाप्रचारिणी सभा, चित्तूरु.

## Samskrita Bhasha Pracharim Sabha, Chittoor.

The following are the Register numbers of the candidetes who got suceessful in the Examinations held on 8th 9th and 10th March 1969.

### परिचयः

I Class 430 445 477 481 482 483 485 535
536 542 566 571 573 574 577 578 579
608 614 616 619 625 626 627 628 629
633 638 639 640 686 713 735 736 737
738 743 748 749 750 751 756 760 761
762 764 765 767 818 819 820 835 838
840 847 857 858 860 861 863 866 868
869 895 897 898 901 902 903 904 905
906 907 908 910 912 913 914 955 973
994 995 996 997 998 999 1000 1001 1002
1093 1018 1025 1038 1039 1064 1068 and 1091

II Class 429 446 449 451 452 470 471 471
473 476 478 484 486 488 489 490 491
493 495 497 498 532 533 534 537 538
539 540 541 557 558 569 572 580 581 582
585 588 590 594 597 598 601 602 603
604 606 607 609 610 613 620 622 623
624 630 632 634 635 637 643 687 700

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 701 | 702 | 703 | 706 | 711 | 742 | 752 | 753 | 754 |
| 755 | 759 | 763 | 766 | 770 | 771 | 772 | 773 | 800 |
| 801 | 809 | 810 | 811 | 812 | 822 | 823 | 824 | 825 |
| 826 | 828 | 829 | 832 | 849 | 859 | 862 | 864 | 865 |
| 867 | 886 | 889 | 890 | 893 | 896 | 909 | 911 | 915 |
| 916 | 917 | 921 | 927 | 928 | 954 | 972 | 974 | 975 |
| 977 | 978 | 991 | 1016 | 1017 | 1019 | 1020 | 1022 | 1026 |
| 1040 | 1041 | 1042 | 1045 | 1046 | 1047 | 1048 | 1051 | 1052 |
| 1053 | 1063 | 1065 | 1067 | 1069 | 1071 | 1072 | 1073 | 1074 |
| 1075 | and | 1092 | | | | | | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| III Class | 442 | 443 | 444 | 447 | 448 | 450 | 454 |
| 455 | 465 | 466 | 468 | 469 | 474 | 479 | 487 |
| 492 | 494 | 530 | 531 | 543 | 575 | 576 | 583 |
| 584 | 586 | 587 | 589 | 591 | 592 | 593 | 595 |
| 596 | 599 | 600 | 605 | 611 | 612 | 615 | 617 |
| 618 | 621 | 636 | 641 | 705 | 710 | 712 | 714 |
| 739 | 803 | 804 | 808 | 813 | 814 | 821 | 827 |
| 831 | 834 | 839 | 849 | 888 | 891 | 892 | 899 |
| 918 | 919 | 920 | 922 | 923 | 925 | 926 | 953 |
| 976 | 979 | 980 | 981 | 982 | 983 | 984 | 986 |
| 987 | 988 | 990 | 992 | 1021 | 1023 | 1024 | 1043 |
| 1044 | 1050 | and | 1070 | | | | |

## अभिज्ञः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| I Class 499 | 500 | 502 | 504 | 506 | 507 | 508 | 509 |

510 511 512 515 516 521 524 561 718
784 993 and 1094

II Class 462 503 505 513 517 518 519 520
523 525 527 544 545 560 647 649 650
720 721 725 728 744 745 747 781 782
783 815 842 845 871 872 875 931 932
943 944 945 957 1004 1005 1006 1009 1028
1030 1056 1084 1089 and 1093

III Class 514 522 546 547 648 651 653 654
655 657 658 662 717 721Ka 723 724 726
727 730 731 746 774 777 779 841 843
850 851 852 853 854 873 874 929 930
933 936 939 940 956 958 959 960 966
1027 1076 1078 1079 1080 1081 1082 1083 1085
1086 1087 1088 and 1090

## विचक्षणः

I Class:—696 only

II Class 528 529 564 666 667 673 733 787
789 790 794 855 877 947 948 949 950
951 952 and 1031

III Class 464 550 551 562 563 668 669 670
671 672 674 675 676 677 734 792 793
795 817 856 876 880 946 965 1032 and
1096

## समर्थः

I Class:— Nill
II Class 475 970 and 1033
III Class 552 553 554 555 556 796 799 1035 1036 and 1061

Passed in II part only :— 565 678 679 680 681 682 683 684 797 798 881 882 883 884 1034 1036 and 1095

## कोविदः

I Class :— Nil.
II Class :— 740 and 741
III Class :— 1059 only.
Passed in I and III Parts only :— 685 only
Passd in III Part only :— 698, 699 and 1102
Passed in II and III Parts only :— 758 and 1037
Passed in I, II, IV, and V Parts only :— 971 and 1058
Passed in II, IV and V Parts only :— 1057 only.

The following candidates stood first in First Class.

Prizes will be awarded to them in due courte.

Parichaya :— 750 S. Sumathi, Thirunagar.
Abhigna :— 506 V. Arunakumari, Cuddapah.
Vichakshana :— 696 M. S. Nagarajan. Trichi.



## कीलकोत्तरायण परीक्षसु उपयुक्तानि केन्द्राणि - 42

(1) अम्बत्तूरु (2) अनन्तपुरमू (3) आल्लगड्डा (4) आत्रेय-पुरमू (5) इन्द्रप्रस्थमू (6) कडप (7) कोनकंचि (8) कोयंबत्तूरु (9) क्रोंपेट (10) गुण्टूरु (11) चित्तूरु (12) चिदम्बरमू (13) चीराल (14) तंजावूरु (15) तिरुचिरापल्ली (16) तिरुमलै (17) तिरुवेंगाटु (18) तिरुनल्वेलि (19) तिरुनगर (20) त्यागरायनगर (21) दोम्मर-नन्धाल (22) नन्धल (23) नंगनल्लूरु (24) नंदलूरु (25) नेल्लूरु (26) पामर्रु (27) प्रशान्तिनिलयमू (28) मन्त्रालयः (29) मचलीपट्टणमू (30) मदुरै (31) मन्त्रागुंडि (32) मेट्टूरुडाम (33) राजमहेन्द्रवरमू-ए (34) राजमहेन्द्रवरमू-बि (35) वरंगल (36) षाहपूरु (37) सीतानगरमू (38) सेलमू (39) सोंपेट (40) हैदराबाद (41) बेंगलूरु (42) चिन-लींगायपालें

उत्तीर्णाः 548

| परीक्षाः | अभ्यार्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे. | द्वि. श्रे | तृ. श्रे. | खण्डशः |
| परिचयः | 381 | 345 | 97 | 146 | 90 | |
| अभिज्ञः | 191 | 162 | 20 | 49 | 57 | |
| विचक्षणः | 58 | 51 | 1 | 20 | 26 | |
| समर्थः | 35 | 31 | — | 3 | 10 | 17 |
| कोविदः | 14 | 12 | — | 2 | 1 | 9 |
| | 679 | 601 | 118 | 220 | 184 | 26 |

स. भा. प्र. सभा, चित्तूर,
15—4—1969.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# सौम्यवत्सरदक्षिणायन परीक्षाणां

— कार्यक्रम : —

| विलंबशुल्केन विना आवेदन पत्रप्रेषणस्य अंतिमतिथिः | विलंबशुल्केन सह आवेदनपत्र प्रेषणास्य अंतिमतिथिः | परीक्षातिथयः | विशेषः |
|---|---|---|---|
| 20-7-69 | 31-7-69 | 1969 सेप्टंबर मासे 6, 7, 8, तिथशः | आवेदन पत्राणि विना मूल्यं लभ्येरन् अपितु पोस्टव्ययार्थं 15 पैसाः प्रेषणीयाः । |

सं. भा. प्र. सभा, चित्तूर,
15—4—1969

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

